किं तर्हि ? औत्सर्गिकमेव लक्षणं भवति । यथा **प्रका**ऽयतृतीये । कस्मात्
**त्रातारं प्रभृतीनि** इति पृथग्व्याख्यातम् । उच्यते । अभिन्नजातीयत्वात् ।
**त्रातारंप्रभृतीनां** साम्नाम् । तानि वैधजातीयानि । अवैधानि **सखेन्दु-**
रादीनि । ततः पृथग्ग्रहणमिति । अनुदूह्याः पाद (°दा ?) इति वक्तव्ये
**यत्** पादगीतिरिति वक्ति [तत्] सस्तोभा साभ्यासा च पादगीतिर्यथा स्यादिति ।  5
अन्यथा पादमात्रमेव स्यात् । अतः पादगीतिग्रहणम् ॥ २ ॥

## एष ब्रह्मौ पर्व विभाग्यम् । इन्द्रोवि द्व्यक्षरः ॥ ३ ॥

**एष ब्रह्मौहो** । **याऋत्वियाः** (ग्रा. ११. १०. ४६८. ५.) । एतत्
पर्व विभाग्यम् । विभाग्यग्रहणात् अन्या अपि भक्तयः । पर्व एव जानीयात् ।
**इन्द्रो विश्वस्य** (१२. ११. ४५६. १) इत्यत्र द्व्यक्षरो वा विभागः । **अथवा**  10
द्व्यक्षरः **प्रस्तावः** । एवं चैतदवाच्यम् । प्राप्तत्वात् । अवसानं पूर्वं प्रस्ताव
इत्युच्यते । उत्तरकालत्वात् कर्षणस्याप्राप्तिः ॥ ३ ॥

## त्र्यक्षर उत्तरे ॥ ४ ॥

उत्तरे साम्नि त्र्यक्षरः **प्रस्तावो** भवति । **इन्द्राऽ २ हो३१ इ** ।
एतावान् ॥ ४ ॥  15

## उपोषुद्वितीय एकाक्षरोऽष्टाक्षरो वा ॥ ५ ॥

**उपोषु जा**तमप्तुरम् (ग्रा. १३. ३. ४८७. २) इति **एकाक्षरः**
प्रस्तावो भवति । **अष्टाक्षरो** वा । उ इत्येकाक्षरः पर्व **वा** । पद्य इति
नोक्तम् । मा भूत् स्तोभः **प्रस्तावाङ्ग**मिति । तत्र चायं स्तोभः । वृत एव ।
निधनत्वात् । वृते किन्तु कुशाविधाने विशेषः ॥ ४ ॥  20

---

1. ALS[2]. तस्मात् for कस्मात् ;
2. B[1] LA S[2]. om. इति ; AL. अभिन्ना for अभिन्न.
3. L A. वैधा for वैध
6. B[1]. मात्रपादम् for पादमात्रम्.
7. B[1]. विभाग्यः, A वा भाग्यम् for विभाग्यम्.
9. A. भाग्यम् for विभाग्यम् ; B[1] LA. अन्यापि for अन्या अपि ; D. om. एव.
12. S[2] AL. कर्षणस्य प्राप्तिः for कर्षणस्याप्राप्तिः
18. S[2]. पद्यत for पद्य
19. B[1] ALS[1] S[2]. प्रस्तावाङ्ग इति for प्रस्तावाङ्गमिति; A व्रतः for वृतः
20. A व्रते for वृते.

अर्षेति पर्व पादो वा ॥ ६ ॥

**अर्षा । इहा** (ग्रा. १४. ४. ५०३. १) अत्र **पर्व** भवति । **पादो वा । पादो वेति** पादान्ते कुशाविधानम् । **इहकारं तु निधनत्वात् सर्व एवो-पेयुः** इति ॥ ६ ॥

5 अपघ्नन् पेति स्वारान्तः ॥ ७ ॥

**होईऽ२३४ या । इयाहाइ । अपघ्नाऽ२३न्पा २३४५** (ग्रा. १४. ४. ५१०. १) एवमन्तो भवति । यस्मादिह स्वारान्तः तस्मादन्यत्रापि स्वारान्त एव । यथा **आनो अग्ने वयो वृधम्** (ग्रा. २. ४. ४३.१) इति । **अपत्यं वृजिनम्** (ग्रा. ३. ११. १०१. १) । **प्रो अयासीत्** (ग्रा. १६. ९.
10 ५५७. २) इति ॥ ७ ॥

इन्द्रम-चतुर्थेऽष्टादशाक्षरः ॥ ८ ॥

**इन्द्रमच्छ** (ग्रा. १७. १०. ५६६. ४) इति **चतुर्थे** अष्टादशाक्षरो भवति ॥ ८ ॥

रैवतऋषभे षट्त्रिंशत् ॥ ९ ॥

15 **रैवतऋषभे** सुरूपे (आ. गा. १. ४. ४६) षट्त्रिंशाक्षरः **प्रस्तावो** भवति । **जुहूमासाइ** इत्येवमन्तः ॥ ९ ॥

वैराजे तृतीयान्तः ॥ १० ॥

**होइया होइया [होइया ३४३] पिब** (आ. गा. २. ७. ८६) इत्येवमन्तः ॥ १० ॥

20 संकृतौ पर्व पादो वा ॥ ११ ॥

**एस्वादोः** (आ. गा. ३. ४. १२८) अत्र **पर्व** भवति । **पादो वा ।**
22 उद्गीथाङ्गत्वात् स्तोभो भवति ॥ ११ ॥

---

5. A °घ्नन्नेति, L S[1] S[2] °घ्नन्वेति for °घ्नन्पेति.

7, 8. AB[1] LD. स्वरान्तः for स्वारान्तः

14. AB[1] B[2] LS[2] °त्रिशम् for °त्रिंशत्.

15. D. सुरूपकृत्नुमूतये । सुदुघामिव गोदुहे । for सुरूपे ... भवति । ; S[1] S[2]. सुरूप for सुरूपे.

20. A कृतौ for संकृतौ.

## वाचोद्वितीये चत्वार्यष्टौ वा ॥ १२ ॥

वाचोव्रतद्वितीये साम्नि चत्वारि भवन्ति । **हुवाइ वाचाम्** (आ. गा. ४. १. १६८) इति अष्टाक्षरो वा । **वाचं हुवाइ** इत्येवमन्तः ॥ १२ ॥

## राथन्तरस्त्रिरुक्तं चेलान्दाद्ये ॥ १३ ॥

**हाउ** (३) **ऊऽ२** (त्रिः) (आ. गा. ५. ५. २०७) एवमन्तः **इला-** 5
**न्दाद्ये** साम्नि भवति । **त्रिरुक्तं चे**ति व्यपदेशात् राथन्तरस्य त्रिरुक्तत्वं दर्शयति । एवं चेत् त्रिरुक्तानीत्युक्ते (त्रिरुक्तमित्युक्ते ?) **राथन्तरो** भवति । **ऊ ऽ ४** । चतुः ॥ १३ ॥

## कश्यपग्रीवाहृदयेडानां संक्षारेषु ॥ १४ ॥

राथन्तरस्त्रिरुक्तं च भवति । **कश्यपग्रीवायां हाउ** (त्रिः) **अहो** 10
**अहो । अहो** (आ. गा. ५. ८. २४०) **प्रजापतेर्हृदये हाउ** (त्रिः) **इमा** (त्रिः) (आ. गा. ५. ८. २४३) **इडानां संक्षारे हाउ** (त्रिः) **इडा** (त्रिः) (आ. गा. ५. ८. २४४) ॥ १४ ॥

## देवव्रतेषु नमोऽन्तः सर्वत्र ॥ १५ ॥

**देवव्रतेषु** सर्वेष्वेव नमःशब्दान्तः । **सर्वत्रे**ति **नमोऽन्त**विशेषणार्थम् । 15
पूर्वो यो नमःशब्दस्तदन्तः प्रस्तावो भवति । **ना २ माः** (आ. गा. ५. ५. १२ - १४) ॥ १५ ॥

## निह्नवे त्रिरुक्तम् ॥ १६ ॥

**निह्नवे इती २ इति** (त्रिः) (आ. गा. ५. ८. २४९) ॥ १६ ॥ 19

---

1. L AS². वाचो व्रते द्वे for वाचो द्वितीये.
2. B¹. व्रते for व्रत°
4. B¹ B². राथन्तरे for राथन्तर°
6. A. राथन्तरस्तृतीयान्तत्वं for राथन्तरस्य त्रिरुक्तत्वं
16. V¹. मनः for नमः.
19. S¹ S². इति त्वोतावान् for इतीऽ२ इति (त्रिः) ।

## परे चाष्टौ ॥ १७ ॥

**परे** निह्नवे अष्टा[व]क्षराणि प्रस्तावो भवति । **स्वयंस्कुन्वाइ । स्वयं-स्कुन्वाइऽ२ इ** (आ. गा. ५. ८. २५०) एवमन्तः । **न** चाभ्यासः । कुतः । पाञ्चविध्योपपत्तेः ॥ १७ ॥

5 ## दिवाकीर्त्ये आदावुपायान्तः ॥ १८ ॥

**दिवाकीर्त्ये** आद्येऽनुगाने हाउ (३) । **आयुः** (त्रिः) । **ज्योति-र्ज्योतिर्ज्योताऽ ३४ औहोवा** (आ. गा. ६. १. २५९) एवमन्तः ॥ १८ ॥

## आत्मनि विधान्तः ॥ १९ ॥

**औहौहोवा होइ** (द्विः) । **सोम्यंमधु** (आ. गा. ६. १. २६५) ।
10 एवमन्तः । विक्रुष्टोऽन्तग्रहणात् । अन्यथा ह्येवमेवावक्ष्यत् **आत्मनि विधेति** । **अथवा संक्रुष्ट एव** । कुतः ? यथाभूताम्नानात् । ऊहकारेण विकर्षः कृत इति चेत् । **न** । **स्तोभोद्धारका ऊहकाराः** । तथा न हि शक्यते स्तोभमुद्धरद्भिः संकर्षः कर्तुमिति । तस्माद् विकर्षः [इति] आमनन्ति । आननं भित्त्वाय-मागतः ॥ १९ ॥

15 ## समैरयेष्वष्टाक्षरः ॥ २० ॥

**समैरयेषु सन्त्वाभूतान्यैरयन्** । **होइ** (आ. गा. ६. १. २६९)
17 एवमन्तः । बहुवचनं शक्करीवत् ॥ २० ॥

---

3. LA. चाभ्यासं for चाभ्यासः

6. B[1]. अनुवाके for अनुगाने ; V[1]. आयुः ३ ज्योतिः ३ ज्योता ३ अहोवा for आयुः ... औहोवा.

9. V[1]. मधुरावर्मतः for मधु एवमन्तः

10. D A. विक्रुष्टोभ°, B[1] विक्रुष्टान्त ° for विक्रुष्टोऽन्त;
D A. वक्ष्यत्, L. वक्षत्, V[1]. अववत्स्यत् for अवक्ष्यत्

11. V[1] AL. अथा° for यथा ; B[1]. विक्रुष्टः for विकर्षः

13. B[1]. अस्मात् for तस्मात् ; V[1]. आमनति । मत्वयागतः, B[1]. आम-नन्ति मध्वयमागतः, for आमनन्ति । आननं भित्वायमागतः ; AL. भिनत्वा for भित्वा.

आदित्यात्मनि चित्रमन्तः ॥ २१ ॥

आदित्यात्मा उवीऽ२ उवि (आ. गा. ६. १. २७०)। अत्र चित्र-संघातो भवति वा। चित्रं देवानामुदगादनीकमेवमन्तः। चित्रान्त इति पाठे एवम्। यदा तु चित्रमिति पाठः तदा चायित्रम्। एतावान् भवति ॥ २१ ॥

चक्षुष्येकाक्षरो द्वे चेद् ॥ २२ ॥ 5

चक्षुः। वाक्। मनः (आ. गा. ६. ३. २८६) इति। अत्रैकाक्षरो भवति। वागिति। किमविशेषेण? न। यद्येते द्वे सामनी भवतः ॥ २२ ॥

वचनम् ॥ २३ ॥

यदा द्वे एकं साम भवति तदा वचनं विधेत्यर्थः। अन्तश्चरति रोचना (आ. गा. ६. ३. २८७) इत्येवमन्तः। तत्र वाङ्मनः प्राण 10 इति नायमनुसंह्रियते। कुतः? अदर्शनात् सामान्ते। अयमेव हि केवलं सामान्ते दृश्यते – अन्तर्देवेष्विति ॥ २३ ॥

उन्नये त्रिरुक्तम् ॥ २४ ॥

उन्नयामि। होइ (आ. गा. ६. ३. २९०) एवं त्रिः ॥ २४ ॥

महानाम्न्यो द्विप्रस्तावाः ॥ २५ ॥ 15

महानाम्नीषु प्रस्तावद्वयं भवति ॥ २५ ॥

द्विपदायां शाक्करे च ॥ २६ ॥

द्विपदायाम् ए। विदामघवन्विदाः (आ. गा. परिशिष्ट. १) शाक्करे। ए। शिक्षाशचीनाम्पताइ ॥ २६ ॥ 19

---

4. V[1]. उपावित्वमिति for यदा तु चित्रमिति ; B[1]. om. तु.

6. B[1] L. तत्र for अत्र

7. D. om. न

10. LAS[1] S[2]. om. तत्र

11. V[1]. संह्वयते for संह्रियते

14. LAB[1] V[1]. om. एवं त्रिः

अध्यास्यायां जारा ॥ २७ ॥

**अध्यास्यायां** जारास्वरो भवति । **आया** इत्ययं जारास्वर एव भवति ॥ २७ ॥

पुरीषपदेषु च । पुरीषपदेषु च ॥ २८ ॥

5 पुरीषपदानि हि **आइवा** (आ. गा. परिशिष्ट ४.) एवमादीनि पञ्च । द्विप्रस्तावाः शक्वर्य इति प्रतिज्ञाप्राप्तप्रस्तावत्रयमुद्दिष्टम् उच्यते । द्विप्रकाराः प्रस्तावाः । कथम्? द्विपदायां शाक्करे चैकः प्रकारः । अध्यास्यायां द्वितीयः प्रकारः । पूर्वयोः संघातः । **अध्यास्यायां** जारेति कृत्वा अतो द्विप्रस्तावा इत्युक्तम् ॥ २८ ॥

10 इति पञ्चविधसूत्रे सभाष्ये प्रथमप्रपाठके

11 द्वितीया खण्डिका ॥

---

5. S[2]. after आदीनि adds : हि

6. V[1]. शक्वरी for शक्वर्यः ; B[1] V[1]. om. ° प्राप्त °

7. S[2]. om. कथम्. ; B[1] चैक for चैकः; ALB[1]. द्वितीय for द्वितीयः

8. V[1]. after प्रस्तावा adds : न.

## तृतीया खण्डिका

### उत्तमपादादौ पर्व प्रतिहारः स न्याय्यः ॥ १ ॥

उत्तमस्य पादस्यादौ यत् **पर्व** स्यात् स **प्रतिहारो** वेदितव्यः । स च **न्याय्य**संज्ञो भवति । प्रयोजनं संव्यवहारः उद्गीथादिक्रमः । कस्मात्? महत्त्वात् । उद्गीथादिक्रमः अपरिमितो ह्युद्गीथो भवति । कथम्? **उत्तरं** 5
**वा एतत्साम्नो यदुद्गीथ** ( ) इति परिमितस्य च प्रतिहारस्य लक्षणे उक्ते परिशेषसिद्ध उद्गीथो भवति । वक्ष्यति च । **उद्गीथेभ्य** इति । यस्मान्नोर्ध्वं प्रतिहार इति च । मानोह्णणीथा इति च । द्विपदासु च । कथमिति तत्रापि द्वितीयपादादौ यत् पर्व [सः] प्रतिहारः स्यात् । कुतः? प्रतिहार-
स्थानत्वात् । तस्य यथैव अन्येषु सामसु उत्तमपादादौ पर्व प्रतिहारो भवति 10
एवमिहापि । स्थानसामान्यात् । उत्तमपादादाविति चोक्ते शक्य [ोऽ] यमर्थः प्रतिपत्तुम् । सत्यपि संबन्धे तेष्वृक्स्वरेष्वर्का इतिवत् । शाक्करवर्णा-दिषूत्तमपादादाविति । **सिषासन्तो वनामहोइ** इति । अयमेव प्रतिस्तोत्रीयं भवति । कुतः? **उत्तमपादाद**ावित्याह । ऋगुत्तममिति चेत् । न । सामाधि-
कारात् । सामसु पाञ्चविध्यम् उच्यते । कस्मात् सामोत्तमो गृह्यते? पर्व- 15

---

2. L A. संन्यायः for स न्याय्यः

4. V[1]. प्रयोजन for प्रयोजनं ; V[1]. उद्गीथाति for उद्गीथादि

5. LA. महत्वा for महत्वात् ; S[2]. उत्तरे for उत्तरं

7. S[1] B[1] S[2]. सिद्धिः, LV[1] A. सिद्धि for सिद्धः

8. D. गृह्णीयाः V[1]. °द्गाणीथाः for ह्णणीथाः

9. B[1]. तत् for यत् ; B[1]. om. स्यात् ... प्रतिहारो (L. 10.)

11. V[1]. चोक्तशक्य यत्पर्वः, LAD S[1] S[2]. चोक्ते शक्यमित्यर्थः for चोक्ते शक्योऽयमर्थः see CN.

12. B[1]. अस्वरेषु for ऋक्स्वरेषु ; V[1]. शब्देलपतेष्वस्वरिषु for तेष्वृक्-स्वरेषु ; D. after °स्वरेषु adds in brackets तेष्वस्वरेषु.

13. L. वनामहो, V[1]. वनावहोई for वनामहोइ ; B[1] V[1]. om. इति ; D. after वनामह इति adds in brackets : (सिषासन्तो वनामहोइ इति) ; DB[1] L A S[1] S[2]. °स्तोत्रं for °स्तोत्रीयं.

14. D. समाना° for सामा°

15. B[1] LAV S[1] S[2]. साम्नो° for सामो° ; D. साम्नोत्तमो गृह्यते (सामोत्तमो).

ग्रहणात् भिन्नस्यापि प्रकरणान्तरे एक एव द्रष्टव्यः । एकवदेव प्रतीतिं दर्शयति । **यथा यन्ता उवा** । समी (मे?) द्वे पर्वणी । द्वे चापि तु प्रतिहारो भवति । अन्यानि चैवंजातीयानि । यथा **गव्योषु** - (ग्रा. ५. ८. १८६. १) प्रथमे **या-शब्दः** उद्गीथाङ्ग एव भवति । प्रतिहारग्रहणम् उद्गीथान्त [त] या । संन्याय्यग्रहणं
5 संव्यवहारार्थम् । अथवा । यत्र विशेषचोदना यथा प्रतिहारसदृशं चेति तत्र अनेकेष्वपि प्रतिहारेषु सत्सु अनेनैव यः सदृशः स्यात् स गृह्यते । नान्यसदृश इति । अतः संन्याय्य इति उक्तम् ॥ १ ॥

बृहद्रथन्तरयोश्च निदर्शनात् । नाइहोतासा - तपारमादीनि ॥ २ ॥

10 इतश्च उत्तमपादादावेव । कुतः? बृहद्रथन्तरयोश्च ब्राह्मणमत्यर्थमुत्तमपादादौ पर्वणः प्रतिहारतां दर्शयति । कथम्? **पञ्चाक्षरेण रथन्तरस्य प्रतिहरति । चतुरक्षरेण बृहतः प्रतिहरति** (ला. श्रौ. सू. VII. 1. 12) **इति । बृहद्रथन्तरयोश्चे**ति हेतुवचनं किमर्थमिति । हेतुवचनं तूत्तमपादादौ पर्वनियमार्थम् । तेन किम्? **त्रैधमन्तर्णिधने गोषातार्विक्रोशं न्याय्यस्य**
15 (प. वि. सू. १. ४. ७) इत्युक्ते पर्वैव प्रतिहारो भवति । अन्यथा तत्र गाने सामविभागस्योक्तान्यन्यानि **नाइ होतासा** (ग्रा. १. १. १. १) **तपा**
17 (ग्रा. १. ३. २४. १) **अरम्** (ग्रा. १. ३. २५. १) **आदीनि** ॥ २ ॥

---

1. $V^1$. भिन्नस्थानि, $B^1$. अभिन्नस्याभि, L $S^1$ $S^2$. भिन्नस्याभि for भिन्नस्यापि.

2. $LB^1$A. om. यथा ; $DB^1$. समिद्धे पर्वणी द्वे, $V^1$. समी द्वे पर्वणाद्वेधे, A. समी द्वे पर्वणी; द्वे L. समीद्धे समीद्धे । पर्वणी द्वे for समे द्वे पर्वणी । द्वे

3. $AV^1B^1$. गव्येषु, $DS^1S^2$. गव्यूषु for गव्योषु.

4. $S^1$. उद्गीथान्त्यया for उद्गीथान्ततया

5. $B^1LAS^2$. सव्यवहारार्थम् for संव्यवहारार्थम् ; AL. चोदन्वा for चोदना.

6. $S^1S^2ALV^1B^1$. च for सः

7. LA. संज्ञाय्य, D. संन्याय for संन्याय्यः.

10. A. उक्तं for उत्तम°.

12. $DLB^1$ A. after प्रतिहरति om. इति.

13. $V^1$. om. तु.

16. $LB^1V^1$A. विभागः स्यात् । तन्मन्यानि for विभागस्योक्तान्यन्यानि

तदादि चेदनेकं प्रागुपायात् पर्वणां विकल्पोऽवान्ता-
नाम् ॥ ३ ॥

उत्तमपादादि **यद्यनेकं** पर्व स्यात् **प्रागुपायात्** तथा सति तदानीं **पर्वणां विकल्पः** । तेषामन्यतमः प्रतिहारः स्यात् इति । किमविशेषेण ? न । यद्येषां मध्ये पर्व वान्तं [तर्हि तत्] पर्व न स्यात् । अथवा यदि वाशब्दान्तं किंचित् पर्व स्यात् ततो न विकल्पः । यथा **आच्छा २ नाप्त्वे २३ । सहो २३४ वा** (ग्रा. १. ३. २१. १) । अत्र न विकल्पः । पूर्वमेव भवति ॥ ३ ॥ 5

क्व विकल्प इति —

अग्नाइ रा२था२म् (ग्रा. १. १. ५. १.) कया २३ शचाइ (ग्रा. ५. ६. १६९. ३) द्वाइषस्ताराऽ२ (ग्रा. ११. ९. ४२८. १) न्याय्यस्य ॥ ४ ॥ 10

एष विकल्पः । **प्रेष्ठं वः** (ग्रा. १. १. ५. १) प्रथमे । वामदेव्ये **कया** (ग्रा. ५. ६. १६९. ३) इति [तृतीये] । **पर्यूषु** (ग्रा. ११. ९. ४२८. १) प्रथमे । एवं **न्याय्यस्य** सामगणस्यैतल्लक्षणम् ॥ ४ ॥ 15

अवान्तानामिति कस्मात् । सहो वा मयो वा ॥ ५ ॥

वान्तानां कस्मात् प्रतिषेध इति कृत्वा वान्तानामेषां विकल्पे प्राप्ते प्रतिषेध उच्यते । **सहो वा** (ग्रा. १. ३. २१. १) **अग्निं वः** (सा. २१) प्रथमे । **मयोवा** (ग्रा. १. १. ८. १) **आ ते वत्सः** (सा. ८) प्रथमे । 19

---

5. D. पर्वोपान्तं, S[1] S[2] B[1] L. पर्वोवान्तं for पर्व वान्तं. ; B[1]. वीशब्दान्तं for वाशब्दान्तं.

6. B[1] S[1]. om. न.

9. A. कः for क्व.

14. AB[1] LV[1] S[1] S[2]. om. कया इति. ; D. after पर्यूषु प्रथमे adds :— प्रधन्वावाना ३ सा - इत्यस्मिन् साम्नि.

17. AB[1] V[1] S[1] S[2]. येषाम् for एषाम्.

यद्यार्चिको वा-शब्दोऽत्र स्यात्ततो विकल्प एव । कुतः? उपचारात् । स्तौभिकेन वा-शब्देन वान्तानीत्युच्यते । कथम्? इष्टारातिब्रूत इत्येवमारभ्य यन्तानतो श्रुष्टास्तासु होमयो इति स्तौभिकेषूपचारः । तस्मादेवमुदाहरणमुक्तं च **सहो वा मयो वेति** ॥ ५ ॥

5 यद्येवम् —

**पूर्वं चेदवृद्धान्त्यं सह तेन वारातेर्ध्वमुपवापृणध्वं प्रवायाँ होतामज्योतीँषि प्रभृतीनि ॥ ६ ॥**

**पूर्वं** यदि न्यायादवृद्धान्त्यं पर्व स्यात् । ततः किम्? **सहो** वा **तेन** न्याय्यो भवति । वेति विकल्पः । किमुदाहरणम्? **आरातेः** (ग्रा. १. १.
10 ६. १) । **त्वन्नो अग्ने महोभिः** (सा. ६) इति प्रथमे । **ध्वमुपवापृणध्वम्** (ग्रा. २. ६. ५५. १) **देवो वो** (सा. ५५) इत्यत्र । **प्रवायाम्** (ग्रा. ३. ८. ७३. १) । **अबोधिया** (सा. ७३) इत्यत्र । **होतामन्द्रो** (ग्रा. २. ४. ४४. १) **यो विश्वाद्ये** (सा. ४४) । **ज्योतींषि** (ग्रा. ३. ११. ९८. १) । **प्रहोत्रे पूर्व्यम्** (सा. ९८) इति **प्रथमे** । एवंप्रभृतीनि चान्यानि ॥ ६ ॥

15 **त्रिष्टुब्जगत्योश्चोपान्त्यं पदं वा ॥ ७ ॥**

त्रिष्टुब्जगतीषु उपान्त्यं **पदं** प्रतिहारो भवति । भू (चे?) दित्यतो हेतु-वचनात् । **नाइहोतासा**-रथन्तरादीनि उदाहरणानि । पर्के **नाइहोतासात्साइवा २३४औहोवा** (ग्रा. १. १. १. १) इति । पूर्वमेतत् पर्व तेपि (तपा?) इति । **अग्ने रक्षाण** (ग्रा. १. ३. २४. १) इत्यत्र **तपाइष्ठा५२३ इशा** । **अग्नेयुङ्क्ष्व**
20 (ग्रा. १. ३. २५. १) इत्यत्र **अरंवा५ २३ हा** । एवमादीन्यपि च प्रथम-

---

1. D. उत्तरः for अत्र.
2. D. (वाशब्देन्यवाशब्देन) for वाशब्देन ; D. ब्रइत for ब्रूत.
3. L. यन्तोनन्तो for यन्तानतो; AB[1] LV[1] S[1] S[2]. वृत्तश्च for °मुक्तं च.
8. V[1]. न्याय्यात् for न्यायात्.
11. V[1]. om. प्रवायाम् अबोधिया इत्यत्र.
17. B[1] V[1]. होतासात for होतासा ; A. पक्षे for पर्के
18. V[1]. एव तत् for एतत्

पङ्क्तौ। अथवा यथोक्तम् **उत्तमपादादौ पर्व** (प. वि. सू. १. ३. १) इति वा। **तदादि चेदनेकम्** (प. वि. सू. १. ३. ३) इति विकल्पो वा। **पूर्वं चेदवृद्धान्त्यं सह तेन वा** (प. वि. सू १. ३. ६) इति। एवमेते विकल्पा भवन्ति। अथवा **उपान्त्यं पदम्** इति वा। चशब्दः पूर्वकल्पनानु- कर्षणार्थः। वाशब्दो विकल्पार्थः। अथवा **स न्याय्य** इत्यस्यानुकर्षणार्थः। 5
ततः किम्? **त्रिष्टुब्जगत्योश्चोपान्त्यं पदं** न्याय्यं भवति। न्याय्यत्वे च प्रतिहारत्वे सदृशे चेत्युक्ते उपान्त्यपदसदृशो भवति। न्याय्यसदृशो भवति। एवं चेद् ग्रामेगेये श्येने उभयथा द्विप्रतिहारसिद्धिः। **महान्तं त्वा मही- नाम्**। एकोऽयं द्विप्रतिहारकल्पः। अथवा **सम्रौ हो** एकोऽयम्। **भद्रौ हो** अयमपरः प्रतिहारपक्षः। एवं द्वौ द्विप्रतिहारकल्पौ सिद्धौ भवतः॥ ७॥ 10

## दिवेदि - मातेराश्वमासूर्यादीनि ॥ ८॥

**दिवेदिवईयो जागृवा २३ द्भीः** (ग्रा. ३. ८. ७९. १) **मातेरसस्य मत्सतद्वया १ यी ३ नो** (ग्रा. १६. ९. ५६१. २) **अश्वन्नत्वा वाजि- नम्माजयाऽ २३० ताः**। (ग्रा. १५. ६. ५२३. ५)। **आसूर्यस्य बृहतो**। **बृहन्नाधी २३** (ग्रा. १६. ९. ५५४. ६) एवमादीनि॥ ८॥ 15

## द्वे चेत्सदृशान्ते ॥ ९॥

यदि **द्वे सदृशान्ते** उभे अपि प्रतिहारौ भवतः। उत्तमपादादौ पर्वेति प्राप्ते पूर्वसमुच्चयमात्रमिदम्॥ ९॥

## हीष्यौ तृम्पे माध्वा वाग्नेसानीऽहो यावा इन्द्रे च॥१०॥

उदाहरणानि **हीष्यौ** यत्रानन्तरे स्याताम्। यथा त्वामग्ने **पुष्करादधि** 20
(ग्रा. १. १. ९. १) इत्यत्र **मूऽ२३४ द्ध्नो**। **वाऽ२३४ इश्वा**। अथ 21

1. ALB[1] V[1]. यथोक्त for यथोक्तम्.
2. AL तत्रादि for तदादि.
4. S[1] S[2] V[1] L B[1] D. वि चशब्दः for वा। चशब्दः; B[1] LV[1]. °कल्पानु° for °कल्पनानु°
5. L S[1] S[2]. विकल्पार्थम् for विकल्पार्थः; V[1] AL. सान्याय्य for स न्याय्यः
6. B[1] L V[1]. भवन्ति for भवति.
8. D. महान्तवो, AL. महान्तवा for महान्तं त्वा.
12. B[1]. °दिवइति for दिवई
15. S[1] S[2] B[1] AV[1] L. om. एवमादीनि.
20. AL. तथा for यथा

**तृम्रे** द्वे। अभित्वा वृषभा - (ग्रा. ५. ५. १६१. २) द्वितीये **तृम्पा२३होइ।** **विया२३हो।** तथा **माध्वा। - माधू३ हाइ। मान्त्सो२३। पवस्वदा** (ग्रा. १७. १०. ५७१. २) इत्यत्र एक [।] माधू अन्यत्र यदि सदृशा स्यात् तत उभे अपि प्रतिहारः। **आग्ने२३ होइ। दाइवा२ हो इममूष्वायाम्** (ग्रा. १. ३. २८. १)। **सनीर२ होइ गाया२ हो।** तत्रैव ते एव। नैते। अग्ने - भेदोपन्यासः। **प्रदर्शनार्थत्वात्।** अनेन आसितादिष्वपि सिद्धं भवति। **आ इन्द्रे च** संहिते च एका आ इन्द्रा। अन्यत्र यदि द्वे स्यातां तदा उभे अपि प्रतिहारौ भवतः। यथा **वयमिन्द्र** (ग्रा. ४. २. १३२. ५) इति पञ्चमे वा२३ इद्धी। तू२३ वा ३ ॥ १० ॥

**असंभवान्निधनपरे विशेवाइशो२। या सादीनि।**
**वृषावृषा२। द्वंवा पोइ बा२। क्षितो तीया२:।**
**मेहा हाइषा २। जनुषा २। धौरा २॥ ११॥**

यत्र तु न उत्तमपादादौ संभवतः तत्र कथमुच्यते **निधनपरे** पर्वणि प्रत्यये यत् पर्व स प्रतिहारो भवति। कुतः? असंभवाद्धेतोः। किं निधनं परमस्येति पर्वणि उदाहरणम् – **विशेवाइशो२** (ग्रा. १. २. १५. १) इदं निधनपरपर्वप्रत्ययम्। कथम्? परस्य पर्वसंघातत्वात्। **यांसादीनि** चोदाहरणानि – **यौंसौं ओ२३४ वा** (ग्रा. १. ३. २२. १)। इदमपि संघातपर्वपरमेव। **वृषेति** भेदेनोपन्यासः। **यांसादीनि**। इतरेषां सामपर्वपराणामतो भेदेनोपन्यासः। **वृषावृषा२ यदिन्द्रो या** (ग्रा. ४. ४. १४८. १)

---

2. L. अथा for तथा; V[1]. माध्वे LAB[1]. मध्वो for माध्वा; D. om. तथा माध्वा। माधू३ हाइ.

3. B[1] D. सदृशः for सदृशा.

8. ALB[1]. ततः, V[1] तत्र for तदा; AB[1] L D S[1] S[2]. प्रतिहारे, V[1]. प्रतिहारो for प्रतिहारौ.

12. LA. होइषा for हाइषा; L. प्रजनुषा, A. पुजनुषा for जनुषा.

13. D. °पादौ for पादादौ

15. B[1]. adds प्रत्यये after पर्वणि

16. V[1]. निधनं for निधन; D. om. °पर्व°;
D. after °प्रत्ययम्। adds :– इदं निधनपर्वप्रत्ययम्.

18. D. भेदोपन्यासः for भेदेनोपन्यासः

19. V[1]. भेदो नोप°, LA. भेदोप° for भेदेनोप°.

इत्यत्र । द्वैरा॰पौइबा२ । अयंतइन्द्र - (ग्रा. ४. ५. १५९. २) द्वितीये । क्षिंतो॰तौयाऽ२ः । उदुत्ये मधु - (ग्रा. ७. २. २५१. २) द्वितीये । महा॰हाइषा ऽ२ः । इन्द्र सुतेषु - (ग्रा. १०. ४. ३८१. ३) इति तृतीये । जनुंषा ऽ२ । अभ्रातृव्यो अना (ग्रा. १०. ६. ३९९. १) इत्यत्र । धा॰रो॰ऽ२ । इममिन्द्र - (९. १२. ३४४. १) प्रथमे । धाराशब्द उपलक्षणार्थः । अथवा धौरा ऽ२ । तरत्समा (ग्रा. १४. ४. ५००. १) सूत्रे (इत्यत्र ?) ॥ ११ ॥ 5

## स्तोभः परोऽविदूरात् प्रतिहारस्य ॥ १२ ॥

स्तोभः प्रतिहारात परस्य भवतु । किमुपद्रवस्य उत प्रतिहर्तुरित्यत आह - प्रतिहारस्यैव [इति] । किं सर्व एव । न । [अविदूरात्] अनन्तरात् 10 स्वरात् परः स्यात् । स प्रतिहर्तुः द्वितीयावसानः प्रतिहारो यदि स्यात् स्तोभश्च प्रथमात्तृतीयाद्वा यद्यारभ्येत ततः प्रतिहाराङ्गः । एवं सर्वेषु द्रष्टव्यम् ॥ १२ ॥

किमुदाहरणम् —

## ये चोग्रमादीनि ॥ १३ ॥ 15

ये च । याइन्द्रभुज (ग्रा. ७. ३. २५४. २-३) इति द्वितीय - तृतीययोः । उग्रम इति उच्चातेजायाम् (ग्रा. १२. १. ४६७. ५-७) । दोऽ३हाऽ३ए (ग्रा. १२. १. ४६७. ११) अत्र परे च । अथवा पञ्चम- सप्तमयोः । उत्तरकारत्वात् कर्षणस्य ॥ १३ ॥

किं सर्व एवाविदूरात् प्रतिहारस्य न भवन्ति— 20

## अनेहिहुवेहुम्मा श्यैत - और्णायवयोश्च ॥ १४ ॥

एहि हुवा च अविदूरावपि भवतः । हुम्मा च । अथवा एंहिहुवा अनन्यस्तोभमुक्तं (!) प्रतिषिध्यते । नान्यत्र । यथा अभिस्तोमैरनौऽ२ । 23

---

9. V[1]. परकस्य for परस्य; V[1]. उपद्गोतुः for उपद्रवस्य.
12. S[1]S[2]ALDB[2]. om. वा.
21, 22. D. हिम्मा for हुम्मा.
21. B[1]LV[1]A. after और्णायवयोश्च add :— ये चोग्रमादीनि.
22. B[1]AL. om. second एहिहुवा.

हुवाइ (ग्रा. ७. २. २५०. २) । अयं तु प्रतिहाराङ्गमेव भवति । तथा उप । स्तुतौऽ२ । हुवाइ । होवा २ । (ग्रा. ३. १२. १०७. २) एवमादिषु प्रतिहाराङ्गं भवति ॥ १४ ॥

## निवृत्तानि दिवस्पायौ ॥ १५ ॥

5 निवृत्तान्येतस्माल्लक्षणात् । दिवाः । पायौवाओऽ२३४ वा । हाऽ३ हाइ । (ग्रा. १. ४. ३९. १) । अयं प्रतिहाराङ्गं न भवति । दिवस्पायाविति मन्द्रान्तं पवैतत् । तस्मादतिदूरात् अतिदूरत्वान्न भवति । अन्यानि चैवंलक्षणानि उदाहरणानि द्रष्टव्यानि । कुतः ? बहुवचनोच्चारणात् निवृत्तानीति ॥ १५ ॥

## 10 सखायआशंयद्गादीनि च ॥ १६ ॥

अनेहिहुवे हुम्मा चेति निवर्तनानि वचनात् । एह्यादीनि । क तेषां विषय इति । अत्र आह – सखायआ । योगे योगे - (ग्रा. ५. ५. १६३. ३) तृतीये । शयद्वादीनि च । शंयद्वावे [इ]ति तद्योगाय (ग्रा. ३. १. ११५. ४) इति चतुर्थे । एह्याः प्रतिषेधक्रमभेदो लघुत्वात् ।
15 अन्यथा यथोदाहरणमेव वक्तव्यं स्यात् । अथवा हुवायाः सौमेधादूर्ध्वं यानि यामानि सामाम्नाये तेषु अङ्गत्वप्रतिषेधः । प्राक् हुवायाः प्रतिहाराङ्गमिति ।
17 अस्माच्च क्रमभेदः ॥ १६ ॥

---

3. D. trans --ये च । यइन्द्रभुज ... प्रतिहारस्य न भवन्ति (p. 25 LL. 16–20). after भवति ॥

4. LA. सुनिवृत्तानि for निवृत्तानि.

6. DB[1] AL. om. न.

8. LA. om. उदाहरणानि.

12. B[1] V[1] D अतः for अत्र

14. LAD एह्याह for एह्याः

15. V[1]. द्ग्रवायासौमेधात्, AL हुवाया सोमेधात् for हुवायाः सौमेधात् ; B[1]. यायोमानि D. यानि यानि (यामनि) L. यानि यार्मनि for यानि यामानि.

16. S[1] S[2]. समाम्नाये for सामाम्नाये.

**पूर्वश्च विधाया विदूरान्निधनाच्च कस्यनूतमिन्द्रंयदिन्द्राह- मिमाउत्वावोइपन्ययादीन्यौ हो॰१ अग्ने राथा॰ २३ मौहो- हो॰१ इन्दूरा॰१ इन्द्रा॰२ ओइकारो वृत्राण्योजिष्ठं पवस्वासोतेति च ॥ १७ ॥**

पूर्वस्य (श्च?) प्रतिहाराङ्गं भवति। कस्मिन् विषये। विधायाः परः। क ?। 5
यथा **कस्यनूनम्** (ग्रा. १. ३. ३४. २) इति द्वितीये । **तमिन्द्रं वाज-यमसि** (ग्रा. ३. १. ११ ९) इति । **यदिन्द्राहम्** (३. १. १२२. २) इति द्वितीये **आइशीयवस्व आइकइत्** । **इमा उत्वा पुरूवसो** (ग्रा. ७. २. २५०) **अभि** - इत्यत्र। एतेषु चतुर्ष्वपि विधायाः परः प्रतिहर्तुर्भवति। **विदूराच्च** स्वरात् परः प्रतिहाराङ्गं भवति । किमुदाहरणम्? **[औहो १ अग्नेराथा** 10
**२३ म्** इति] **प्रेष्ठं** द्वितीये (ग्रा. १. १. ५. २)। **[औहोहो १ इ। इन्दूरा १ इन्द्रा** २ इति] **आविशन् कलशम्** (ग्रा. १३. ३. ४८९. २) इति द्वितीये एव। **वोइपन्यया**। **अग्निर्वृत्राणि** (ग्रा. १. १. ४. २) इति द्वितीये। न तु चायम् ओइकारपूर्वाङ्गं तत एवेति दृष्टोऽयं जास्वर औहो ओहा इति। अयमपि विदूरात्पर एव। ओइकारस्तु प्रतिहाराङ्गं भवति। **वृत्राणि**। 15
**अग्निर्वृत्राणि** - (ग्रा. १. १. ४. १) **प्रथमे** । असावपि जास्वरः पृथग्रूप एव द्रष्टव्य इत्यतोऽङ्गतः क्रियते । कथमिति । हेतौ तवेद इत्येताः प्रकृतयश्च प्रकृतमोकारादिभ्यः संज्ञीभवन्तीति। समान एव **संज्ञाकरणे** चतुर्थेऽपि ओइ-कारः पृथग्भवति। यथा **ओवा** । **उपप्रेक्षमधुमतिक्षियन्तः** । **ओवा** (ग्रा. १२. १०. ४४४. १) इत्यत्र **ओइ** । **पुष्येमरयिन्धीमहे** ईति पृथग् 20

---

9. B[1] L A S[1] S[2]. एते तु for एतेषु; A. परिहर्तुः for प्रतिहर्तुः; B[1]. एवेति for भवति.
10. S[2]. परं for परः
11. L A. द्वितीयः for द्वितीये
12. L A. द्वितीयः for द्वितीये.
14. A. पूर्वाजगन्त एवेति for पूर्वाङ्गं तत एवेति.
17. D. om. इति; V[1]. प्रभृतयः for प्रकृतयश्च.
18. B[1] L प्रकृतमेकारादिभ्यः संज्ञीभवन्ति, V[1]. प्रभृतमोकादित्यः संज्ञीभवति for प्रकृतमोकारादिभ्यः संज्ञीभवन्ति;
A. संज्ञा for संज्ञी; B[1] V[1]. संमानः for समानः

भवतः । तथेहापि पृथक्भूतत्वादङ्गभाव उच्यते । **ओजिष्ठम्**। इहाइ (पि ?) ओइकारः प्रतिहाराङ्गं भवति । **आग्नाओऽ२३४ वा**। **ओजिष्ठऽ३मा** (ग्रा. २. ९. ८१. १) इत्यत्र । **पवस्वेति** प्रतिहाराङ्गं **पवस्वमधुमत्तम** (ग्रा. १७. ११. ५७८. १) इति प्रथमे । **आसोतेति** च ओइकारः प्रतिहाराङ्गं भवति । **आसोता परिषिञ्चत** (ग्रा. १७. ११. ५८०. ४) इति । एतेषु चतुर्षु निधनात् परः स्तोभः प्रतिहाराङ्गं भवति । ओइकारादिति चेन्न । स्तोभमात्राधिकारात् ॥ १७ ॥

इति पञ्चविधसूत्रे सभाष्ये प्रथमप्रपाठके

तृतीया खण्डिका ॥ ३ ॥

---

## चतुर्थी खण्डिका ।

**प्रतिहारसदृशं चाप्रस्तावो निधनवतीषु न चेदुद्गीथादि-र्नकितिस्रःप्रभृतीनि ॥ १ ॥**

**प्रतिहारसदृशं** यत् पर्व तच्च प्रतिहारः । किं सर्वत्र । [न । अ-] **प्रस्तावः** । प्रस्तावस्तु प्रतिहारसदृशोऽपि सन् नैव प्रतिहारः । [स **न चेदुद्गी थादिः** । ] किमुक्तं भवति ? । यस्मिन् साम्नि उद्गीथादौ [प्रतिहारसदृशं यत् पर्व स्यात् तत् न] प्रतिहारो भवति **निधनवतीषु** । किमुदाहरणम् । **नकिर्देवा** (ग्रा. ५. ७. १७६. १) **तिस्रोवाच** (ग्रा १२. १. ४७१. १) इति **प्रथमः** । किमुक्तं भवति । यस्मिन् साम्नि उद्गीथादौ प्रतिहारसदृशं पर्व स्यात् तत्रान्या-न्यपि पर्वाणि तत्सदृशानि नैव भवन्तीत्येके । अन्ये तु नैवम् । किं तर्हि । उद्गीथवर्जमन्यत् पर्व प्रतिहारमेव मन्यन्ते तत्सदृशम् ॥ १ ॥

**अनुद्गीथादिरिति कस्मात् ॥ २ ॥**

**अनुद्गीथादिरिति कस्मात्** प्रतिषेधः ॥ २ ॥

येषु हीष्यादौ प्रतिहारसदृशः प्रतिषिध्यत इत्यत आह —

**प्रव इन्द्रैष ब्रह्मा ॥ ३ ॥**

**प्रव इन्द्र** - इति **प्रवइन्द्राय मादनम्** (ग्रा. ४. ५. १५६. १) इति प्रथमे । **एष ब्रह्मा** इति **एष ब्रह्माय ऋत्विय** (ग्रा. ११. १०. ४३८. २) इति द्वितीये ॥ ३ ॥

**सौमित्रादीनि स्तोभविभाग्यानि ॥ ४ ॥**

संव्यवहारार्थम् ॥ ४ ॥

---

5. V[1] AL B[1] S[1] S[2]. सत् for सन्

9. AB[1] S[1] S[2]. तत्रान्येपि, L. तत्रान्येपि प, V[1]. तत्रान्यज्ञेपि for तत्रा-न्यान्यपि.

15. LA. ब्रह्म for ब्रह्मा.

17. B[1] AL. om. एष ब्रह्मा इति.

20. SS[1] S[2]. सव्यवहारार्थम् for संव्यवहारार्थम्.

## भूयिष्ठपदसदृशगीतानि विभाग्यानि ॥ ५ ॥

भूयिष्ठेषु सदृशेषु येषु गीतिस्तानि विभाग्यानि भवन्ति । अथवा पदेषु याश्च (च?) भूयिष्ठा गीतिरिति ॥ ५ ॥

## आद्यन्तयोस्तु विकारो नान्यत्वकरः ॥ ६ ॥

5 आदावन्ते च यो विकारः स्यात् नासावन्यत्वं करोति । यथा आष्टादंष्ट्रयोः ॥ ६ ॥

## अक्षरेण चौनाधिक्यम् ॥ ७ ॥

अन्यत्वकरं न भवति ॥ ७ ॥

## तेषूपान्त्यः पादगीतिरिदंतेप्रभृतीनि ॥ ८ ॥

10 प्रतिहारो भवतीति वाक्यशेषः । गीतिग्रहणम् । सर्वस्तोभा साभ्यासा च पादगीतिः । **इदंत एकम्** (ग्रा. २. ७. ६५. १) इत्यादीन्युदाहरणानि ॥ ८ ॥

## ऋक्समे द्वैधमुत्तमं बहिर्निधने ॥ ९ ॥

ऋक्समे विभाग्ये बहिर्निधने द्वैधमुत्तमं पदम् । ऋचा समम् ऋक्-
15 समम् । कथम्? त्रयाणां कर्तॄणां विभज्यमानं समम् ऋचा समाप्यत इति ऋचा समम् । तस्मिन् बहिर्निधने सति द्विधा भवत्युत्तमं पदम् ॥ ९ ॥

किमुदाहरणम्?

## कदाग्निमीडे न्याय्यस्य ॥ १० ॥

एकन्याय्यस्य सामगणस्य एतल्लक्षणं भवति । **कदावसो** (ग्रा. ६. १२.
20 २२८. १) प्रथमे । तथा च **मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् ।**
21 **ईडा २ इ** (आ. गा. ४. २. १७. ६) [इति] ॥ १० ॥

---

1. B[1]B[2]AV[1]L. °सदृशं for °सदृश
2. AL. om. येषु.
4. S[1]DB[2]L. °कारः for करः; S[1]DS[2]B[1]B[2]AL. after करः add:-इति
7. S[1]AL DS[2]. चोना° for चौना°
8. D. °कारं for करं
10. AL. °स्तोत्रा for °स्तोभा
13. S[2]. ऋक्सामे for ऋक्समे.
18. DB[2]LA. for न्यायस्य न्याय्यस्य

## त्रैधमन्तर्निधने गोषाताविकोशं न्याय्यस्य ॥ ११ ॥

तदन्तर्निधने ऋक्समे विधाने तव्यं (त्रैधं?) भवति पदम्। **गोषाता**। **कस्य नूनं** (ग्र. १. ३. ३४. १) प्रथमे । **विकोशम्** । **अभिद्युम्नम्** (ग्रा. १७. ११. ५७९. १) प्रथमे ॥ ११ ॥

## त्रिपदास्वत्यृचमावृत्तास्वन्त्या पादगीतिः ॥ १२ ॥ 5

त्रिपदासु ऋक्षु अत्यृचमावृत्तासु विधासु अन्त्या पादगीतिः प्रतिहारो भवति । अत्यृचमिति । अतीत्य ऋचमत्यृचम् ॥ १२ ॥

## शन्नोयद्वीकयानासु प्रिये शुक्रचन्द्रयोः सर्पराज्ञीष्वानन्दप्रतिनन्दयोरिन्द्रस्य रोचने ॥ १३ ॥

उदाहरणानि । **शंनोदेवीर** (ग्रा. १. ३. ३३. २) इति द्वितीये । 10 **यद्वीडायम्** (ग्रा. ५. १०. २०७.) । **कयानश्चित्र** (ग्रा. ५. ६. १६९.) इति । बह्वीष्वेव । यथा **बृहद्वयाम्** (ग्रा. २. ९. ८८) इत्येवमादिषु । **प्रियहोइ** । **अग्न आयाहि** (आ. गा. ३. ७. ८७) इति । **शुक्रचन्द्रयोः** । सर्पराज्ञ्यः । हाउ (त्रिः) वा । **ईन्दूः** (आ. गा. ६. २. २७६) एवमाद्याः । आनन्दप्रतिनन्दौ । **उवीऽर** । **हिर्गीऽर** (आ. गा. ६. २. २७१) इति । 15 परं च । **इन्द्रस्य रोचनम्** । **अन्तर्देवेषू ऽ३ रोचासाऽरइ** (आ. ६. ३. २८७) [इति।] एतेषु तृतीयः पादः सस्तोभो भवति । प्रतिहारगीतिग्रहणात् ॥ १३ ॥

## अन्त्ये चेदभ्यासः प्राङ्निधनादन्त्ययोः पदयोर्विकल्पो-द्रिवो वचो राजा तुविद्युम्नम् ॥ १४ ॥ 20

**अन्त्ये चेत्** पदैकदेशाभ्यासः प्राङ् निधनात् स्यात् । अत्रान्त्ययोः पादयोर्विकल्पो भवति । किमुदाहरणम् ? । **द्रिवो** । श्रुत्ताष्टके (ग्रा. १०. ३. ३७१. 22

---

1. L. विकोषं for विकोशं; VD AL. न्यायस्य for न्याय्यस्य.

8. S[1] L B[1] B[2] AV[1] S[2]. प्रियेषु for प्रिये.

19. D. after प्राङ् adds : न.

21. V[1]. चेत्...स्यात् here readings are very corrupt; D. after प्राङ् adds:. न; AL. निधना for निधनात्; S[1] S[2]. अन्ययोः for अन्त्ययोः

१-८)। वचो। इमेत इन्द्र ते वयम् (१०. ३. ३७३. १) इत्याद्ये। राजा। इन्दुर्वाजी पवते। (ग्रा. १५. ७. ५४०. ४) इत्यन्ते। तुविद्युम्नम्। अभीनोवा (ग्रा. १६. ८. ५४९. ५) इत्यन्ते ॥ १४ ॥

कृत्स्नेऽभ्यास उत्तरेऽन्त्यधर्मश्चक्राणओऽ२३ सूनू२ -
सत्याऽ ३१२३ उद्धू२शाऽ २३४ मी ॥ १४ ॥

यत्र कृत्स्नं पदमभ्यस्यते तत्र उत्तरेऽभ्यासेऽन्त्यधर्मो वेदितव्यः। उदाहरणम् – चक्राण ओ। यज्ञ इन्द्रम् (ग्रा. ३. १. १२१. १) इत्यत्र। सूऽ३ नु२सत्या ३१२३ (ग्रा. ५. ६. १६८. ३) गौरीविते। उद्ध२शाऽ २३४ मी। गापन्तित्वा (ग्रा. ९. १२. ३४२. ३) इति तृतीये ॥ १४ ॥

एष न्यायोऽसत्तिसामपर्वं। यजिष्ठमृञ्जसे ३ हाइ योस्याऽ
३ हाइ त्वा२साऽ२३सुनूऽ३२होइ। सत्योऽ२३४ हा
याजाऽ३हाऽ३ग्माऽ३ याइ ॥ १५ ॥

एष न्यायः प्रतिहारस्य। असप्तिसामपर्व संघातपर्व च प्रतिहारो भवति। किं सर्वमेव। यदा सप्ति स्यात् यत्र सप्ताक्षराण्यन्तर्भूतानि [तत् सप्ति।] न [सप्ति अ-] सप्तीत्युच्यते। याजिष्ठमृञ्जसेऽ३हाइ। दूतं वः (ग्रा. १. २. १२. १) इत्यत्र। यास्याऽ३ हाइ। प्रसो अग्ने (ग्रा. ३. १२. १०८. १) इत्यत्र। सूनूऽ३२होइ। सत्यो ऽ २३४ हा। अभि प्रगो (५. ६. १६८. १) इत्यत्र प्रथमे। याजाऽ ३ हाइ ग्माऽ ३ याइ। प्रत्यस्मै (ग्रा. ९. १. ३५२. १) आद्ये ॥ १५ ॥

॥ इति पञ्चविधसूत्रे सभाष्ये प्रथमप्रपाठके चतुर्थी खण्डिका ॥ ४ ॥

---

6. V[1]L. before यत्र adds: न्य and B[1]AS[1]S[2]. न. V[1]. °भ्यस्येति, S[1]S[2] °भासेति, LB[1]A °भ्यसेति for °भ्यस्यते.

## अथ पञ्चमी खण्डिका

**अथानुक्रमणं विकल्पार्थम् ॥ १ ॥**

सामान्यलक्षणमुक्तम् । अथेदानीमाम्नायानुपूर्व्येणानुक्रमिष्यामि **प्रतिहारं विकल्पार्थ**मिति । अनेन कल्पदर्शनार्थं क्वचिद्विकल्पप्राप्तानां समुच्चयः । क्वचिच्च समुच्चयप्राप्तानां विकल्पः । क्वचित् प्राप्ते निषिध्यते । एवं विकल्पार्थम् ॥ १ ॥ 5

**स्मृतानां च ॥ २ ॥**

अवशिष्टे स्मरणे कस्मादाह **स्मृतानां** चेति । उच्यते । य एतल्लक्षणोक्तास्तेषामस्ति लिङ्गवत्ता । कथं बृहद्रथन्तरयोरुत्तमपादादौ अन्यार्थः प्रतिहारं निदर्शयति। य[द्] एषां श्रुतिपरामर्शादिभिः कारणैः श्रुतिपूर्वकत्वं गम्यते । 10
इमे तु स्मर्यन्त एव न लिङ्ग्यन्ते । तस्मादुपपन्न उपदेशः **स्मृतानां चेति** ॥ २ ॥

**अस्य या२ ३ ज्ञा ॥ ३ ॥**

**अग्नि दूतायां** (ग्राम १. १. ३. १.) स्तोभप्रतिषेधार्थम् । **विकल्पार्थं** वा ॥ ३ ॥

**द्वौ चेदस्तोभौ ॥ ४ ॥** 15

एकस्मिन् प्रतिहारे सति स्तोभः प्रतिषिध्यते ; द्विप्रतिहारे न प्रति- षिध्यते इति प्रतिषेधः **द्वौ चेदस्तो**भाविति । सिद्धवद्ग्रहणं प्रतिहारसदृशम् । प्राप्तत्वात् ॥ ४ ॥

**विधा वा ॥ ५ ॥**

**विधा वा** प्रतिहारो भवति ॥ ५ ॥ 20

---

3. B[1]. पूर्वेण for °पूर्व्येण.

5. A. °प्राप्तं, LV[1]. प्राप्त for प्राप्ते.

8. D. अविशिष्टे for अवशिष्टे ; S[1]. सुतानां, ALB[1]. श्रुतानां for स्मृतानां.

10. V[1]. ते एतेषां for यदेषां ; B[1] AL S[1] S[2]. य एषां श्रुति एषमर्यादिभिः for य [द्] एषां श्रुतिपरामर्शादिभिः.

16. AL D. एतस्मिन् for एकस्मिन् ; V[1]. द्विप्रतिहारस्थे for द्विप्रति- हारे.

**एवं सर्वेषु वैधेषु येषूत्तमपादाद्यन्त्या विधा प्रस्तावश्चा-न्यस्त्रयो विकल्पा होताम दिवि सं यद्वाहि । प्रहोत्रे पादु भद्रं भद्रम् आमन्द्रैर्ब्राह्मणादीनि च ॥ ६ ॥**

**एवं सर्वेषु वैधेषु त्रयो विकल्पा** भवन्ति । किं सर्वेष्वेव । न । **येषूत्तमपादाद्यन्त्या विधा** । उत्तमपादान्तविधायामयमुत्तमपादाद्यान्त्यविधा । अथवा उत्तमपादाद्यन्त्या विधा इति पाठः । उत्तमपादादान्त्या स्यात् । अन्त्य पर्वेति । सेयमपादाद्यन्त्या विधेति । **प्रस्तावश्चान्यः** अभिविधौ यदि स्यात् ततः एते **त्रयो विकल्पा** भवन्ति । नान्यथा । उदाहरणानि - **होताम** । **यो विश्वा** (ग्रा. २. ४. ४४.) [इत्यत्र] । **दिवि**सन् । त्वेपस्ते (ग्रा. ३. ९. ८३. १) इत्यत्र । **यद्वाहिष्ठं** (ग्रा. ३. ९. ८६. २) द्वितीये । **प्रहोत्रे** (ग्रा. ३. ११. ९८. १.) प्रथमे । **अपादुशी** । (ग्रा. ४. ४. १४५. १.) प्रथम एव । **भद्रं भद्रम्** । (ग्रा. ५. ६. १६३. १.) इत्यत्र । **आमन्द्रैः** । (ग्रा. ६. २. २४६. १.) इत्यत्र । **ब्राह्मणादिन्द्र** । (ग्रा. ६. १२. २२९. १.) इत्यत्र । एवमादीनि ॥ ६ ॥

**इन्द्रमित्साकं लक्षणशेषे यावद्वचनः ॥ ७ ॥**

लक्षणशेषे यत्रैव लक्षणं नावतरति स शेषः । तत्र **यावद्वचनः** प्रतिहारः । यावदे(दि?)त्युच्यते तदेतत् स्तोभनिवृत्त्यर्थम् । अथवा संधिसामान्याद्यावद्-वचनमिति । यस्मिन्नेवोच्यते तस्मिन्नेव भवति । अन्यत्रापि न भवति ॥ ७ ॥

**समिद्धस्तोभान्तः ॥ ८ ॥**

**अग्निर्वृत्राण्यां** (ग्रा. १. १. ४. १) **समिद्ध** इत्येवमादि**स्तोभान्तो** भवति । परस्तोभात् पूर्वनिवृत्त्यर्थं च । अथवा निधनमेतत् । तस्मादपि प्राप्तिरिति तदेतन्नोपपद्यते । उपायलक्षणाभावात् । आह – यद्यपि उपाय-

---

5. A. °पादान्त्यविधायामयम्, V. पादादाविधायामयम् for °पादान्त-विधायामयम् ; D. पादाद्यन्त्या, V. पादाद्यां । द्यंत for पादाद्यान्त्य°.

7. AVL D. कृतः, B[1]. कुतः for ततः

20. D. स्तोभान्ता भवन्ति for स्तोभान्तो भवति.

21. B[1]. तस्मादिति for तस्मादपि ; V[1]. तस्मादप्राप्तिः for तस्मादपि प्राप्तिः.

लक्षणं नास्तीति तथापि निधनम् । सामतन्त्रे निधनोपचारात् । द्विव-तोऽन्त्ये (सा. तं. ३. ९. १) इत्यत्र ॥ ८ ॥

**स्तुषे मित्रमिव प्राऽ२३याम् ॥ ९ ॥**

प्रेष्ठं वः (ग्रा. १. १. ५. ३) तृतीये । असंभवादिति प्राप्ते ग्रहणं विशेषार्थम् ॥ ९ ॥ 5

**तस्य निर्योक्ता यदुद्गीथाद्वर्षीयान् ॥ १० ॥**

तस्य यथैतस्य निर्योक्ता ब्राह्मणेन यदुद्गीथाद् वर्षीयान् भवति ॥ १० ॥

कथम्? उदाहरन्ति—

**तस्माज्जरत्पर्वाग्नायेऽ२ (ग्रा. १. १. ५. ३) ॥ ११ ॥** 10

ज[रत] भेदने । तस्मात् भिन्नं पर्व प्रतिहारः । कथं भेद इत्युच्यते । संघातपर्व एतद्भिन्नम् । अन्ये पुनर्य एवेति पर्वभेदनं कुर्वन्ति ॥ ११ ॥

**नमोभिः सम्राजन्ताम् (ग्रा. १. २. १७. १) ॥ १२ ॥**

निधनवत्वात् ॥ १२ ॥

**एका चेदाश्वा प्रस्तावो द्विप्रतिहारम् ॥ १३ ॥** 15

आश्वा। औहोऽ३४ वा (ग्रा. १. २. १७. १) यन्ततायां (?) प्रस्तावः। तदेतत् द्विविधे पादे द्विपदाऽवेकस्मिन् प्रस्तावे सर्वत्र द्विप्रतिहारं स्यात्। द्विप्रस्तावत्वे च एकप्रतिहारत्वहेतुः सामान्यः स्यात् ॥ १३ ॥ 18

---

1. DB[1]. सामतन्त्र for सामतन्त्रे ; V[1]. द्विविध्यन्त्य, द्विविधान्त्य for द्विवतोऽन्त्ये.

9. V[1]. उदरं वेति for उदाहरन्ति.

11, 12. AL B[1]. अभिन्नम्, DS[1]. निधनम् for भिन्नम् ;

12. DV[1]S[1]. अन्येषु नर्य for अन्ये पुनर्य ; ALB[1]D. om. पव.

14. V[1]. निधनत्वात् for निधनवत्वात्.

16. यन्ततायां See. CN.

18. B[1]V[1]AL. °हेतुसामान्यः for हेतुः सामान्यः.

सम्राजन्तामित्युत्तमे ॥ १४ ॥

एकस्मिन् प्राप्ते समुच्चयार्थं विकल्पार्थं वा ॥ १४ ॥

वान्तो वा ॥ १५ ॥

अयमेव वान्त इत्यर्थः ॥ १५ ॥

5 उहुवादिर्वा पदान्तः ॥ १६ ॥

विकल्पः पदान्त इति माभूत् कृत्स्नप्रसङ्गः ॥ १६ ॥

इहाहेति वा स्तोभावगातॄणां तस्य नियोक्ता ॥ १७ ॥

इहाहेति वा स्तोभयोर्नियोक्ता अगातारो मा गायन्तीति ॥ १७ ॥

होऽ२३४र्तिया: ॥ १८ ॥

10 होऽ२३४र्तिया: । अग्निमिन्धानो मनसा (ग्रा. १. २. १९. १) इत्यत्र ॥ १८ ॥

असंभवो वाग्नाद्द्वितीयपादादौ ॥ १९ ॥

आग्ना [ओवा] ओजि (ग्रा. ३. ९. ८१. १) अग्निस्तिग्मेन (ग्रा. १. ३. २२. १) असाव्यंशुः (ग्रा. १३. १. ४७३. ३) इति तृतीये । द्वितीय-
15 पादादौ प्रतिहारो भवति । किं सर्वत्र । न । यत्रासंभव उत्तमपादादौ ॥ १९ ॥

परं वा चतुरक्षरमग्निस्ति भिन्धिसदसोऽसावि दाऽ२ साऽ२ म् ॥ २० ॥

परं वा चतुरक्षरं प्रतिहारो भवति । उदाहरणानि - अग्निस्तिग्मेन (ग्रा. १. ३. २२. १) इति प्रथमे । भिन्धिविश्वा (ग्रा. ४. २. १३४. १)
20 इति । सदसस्पतिम् (ग्रा. ५. ६. १७१. १) इति । असाव्यंशुः

---

4. V[1]. वान्त्य: for वान्तः.
7. V[2]. इहहैति see CN.
8. DB[1] AL. गायतीति for गायन्तीति.
12. V. असंभवाचाग्ना, AL असंभवा वाग्ना for असंभवो वाग्ना.
13. AL om. अग्नि.

(ग्रा· १३· १. ४७३. ३) इति तृतीये । **दामाम्** (ग्रा. १· ४. ३५ ४) [इति चतुर्थे ।] यज्ञायज्ञीये असंभवादिति प्राप्ते ग्रहणम् । परस्यैकदर्शनात् निधनप्रकरणे । अक्षरं तु वागित्येवम् ॥ २० ॥

**ऊर्जा पाता चतास्भा इति च स्तोभान्तौ ॥ २१ ॥**

**पाहिनो अग्न एकया** (ग्रा. १. ४. ३६· २) इति च द्वितीये **औहौहोवा** इत्येवमन्तौ ॥ २१ ॥ 5

**पाहि हा वा ॥ २२ ॥**

उत्तमपादादाविति प्राप्तस्य ग्रहणं विकल्पार्थम् ॥ २२ ॥

**आजातासौ द्विःकृष्टान्तः ॥ २३ ॥**

**अधज्मा ओवा** (ग्रा. २. ५. ५२. १) इति । **द्विःकृष्टान्त** इति चतुरक्षरनिवृत्त्यर्थम् । द्विःकृष्टान्त इति वचनात् । अन्यत्र सकृत्कृष्टान्तो भवति । यथा 'नेमिं क्रीडन्' (प. वि. सू. १. ७. ४) सकृत्कृष्टान्त इति ॥ २३ ॥ 10

**कायमा** (ग्रा. २. ५. ५३. २) **द्वितीये तृतीयः पादो होइ-कारान्तः ॥ २४ ॥** 15

अन्यथा प्राप्त आरम्भः । कथम् । हीष्यादिभ्योऽन्यत्र विधाय प्रोक्तमिति ॥ २४ ॥

**ओइ प्राना ओ२३४ वा ॥ २५ ॥**

**अग्न ओजिष्ठायां** (ग्रा. २. ६. ८१. १) [इति ।] विकल्पार्थं ग्रहणम् ॥ २५ ॥ 20

**द्वौ चेत् स्तोभादी द्व्यक्षरम् ॥ २६ ॥**

**द्वौ चेत्** प्रतिहारावित्यभिप्रेत्य । एते (°तौ?) **स्तोभादी** स्याताम् । द्वितीयस्य प्राप्तिः । प्रतिहारसदृशं चेति ॥ २६ ॥ 23

---

3. A. एव for एवम्.

12. D. नेमिन्तष्टे क्रीडन्नूर्मि, AL. नेमिक्रीडन्तु for नेमिंक्रीडन्.

22. V[1]. after °प्रेत्य adds: स्तो

पवस्वासोतेति च ॥ २७ ॥

पवस्व मधु (ग्रा. १७. ११. ५७८. १) इति प्रथमे । आसोता (ग्रा. १७. ११. ५८०. १) इति प्रथम एव । लक्षणनिर्देशो यथासंभवम् ॥ २७ ॥

वासाऽ३ उवा ॥ २८ ॥

5 त्वंहिक्षैतवत् (ग्रा. ३. ९. ८४. १) इति । वचनं विकल्पार्थम् ॥ २८ ॥

पूर्वा वा विधा ॥ २९ ॥

अस्मादेव पर्वणः पूर्वा वा विधा ॥ २९ ॥

ओहुवाइशू ऽ२३४ षा (ग्रा. ३. ९. ८७. १) ॥ ३० ॥

विशोविशीये प्राप्ते विकल्पार्थं ग्रहणम् ॥ ३० ॥

10 परो वा पूर्वं वा ॥ ३१ ॥

संघातः परोऽभिप्रेतः । ओम् हुंमाशब्दात् पूर्वं वा । नपुंसकाभिधानात् पर्व ॥ ३१ ॥

उष्णिक्ष्वतिक्रान्तो न्याय्यः ॥ ३२ ॥

प्रतिहारः उष्णिक्षु अतिक्रान्त उपरिगतो वेदितव्यः । क्व । यत्र
15 चतुरक्षरं पादव्यवस्थितं तत्र न्याय्यः ॥ ३२ ॥

पूर्वेषां विकल्पो महाऽ२३ होये नाऽ२३ वेऽ२३ ॥ ३३ ॥

पूर्वेषां वर्णानां विकल्पो नोत्तरेषाम् । कोऽत्र विशेषः । उच्यते । प्रतिहारसदृशं चेत्युक्ते अतिक्रान्तेन सदृशं यत् [तत] गृह्यते । न पूर्वसदृशम् । उदाहरणम् । महाऽ२३ होये२ (ग्रा. ३. ११. ९७. १) । पुरुत्वा - प्रथमे
20 विकर्षं कृत्वा । नाऽ२३ वे ३ (ग्रा. ३. ११. ९८. २) । प्रहोत्रेपू -
21 द्वितीये ॥ ३३ ॥

---

5. A. om. त्वं...विकल्पार्थम् ॥ पूर्वा वा विधा.

7. L. om. अस्माद्...विधा.

11. V[1]. अङ्गं मा for ओम् हुंमा.

15. D. न्यायः for न्याय्यः.

17. S[1] S[2] DB[1] AL. om. वर्णानाम्.

एष न्याय्यः ॥ ३४ ॥

किं सर्वासूष्णिक्ष्विति । उच्यते । यत्र संभवोऽस्य न्याय्यस्य तत्रैष न्याय्यः । असंभवे तु यथोक्तमेव ॥ ३४ ॥

अस्माइ देहि जातवेदः (ग्रा. ३. ११. ९९. १) ॥ ३५ ॥

श्रुध्ये एष न्याय्य इति यो विभागः । किंविषयो न्याय्य इति । 5
सर्वेषु श्रुध्येषु एकस्यामेव उत्सर्गो द्रष्टव्यः । यथा नदं व ओदतीनाम् (सा. १५१२) इत्यत्र ॥ ३५ ॥

श्रुधियेति (ग्रा. ३. ११. ९९. १) वा ॥ ३६ ॥

विकल्पः ॥ ३६ ॥

हव्येति न तस्य ॥ ३७ ॥ 10

न तस्य मायया चन (३. ११. १०४. १) इत्यत्र हव्येति द्व्यक्षरः प्रतिहारः इति ॥ ३७ ॥

॥ इति पञ्चविधसूत्रे प्रथमप्रपाठके सभाष्ये पञ्चमी खण्डिका ॥ ५ ॥ 13

---

1. $DV^1B^1$. न्यायः for न्याय्यः.

2, 3. A. यत्रौ भवोप्यन्यायस्य for यत्र संभवोऽस्य न्याय्यस्य ; $V^1B^1L$ $S^1S^2$. संभवोऽप्यन्यायस्य for संभवाऽस्य न्याय्यस्य.

5. $V^1DB^1$. न्यायः for न्याय्यः.

## अथ षष्ठी खण्डिका ॥

शंयत् । हा । औ३होइ । गाऽ२३४ वाइ ॥ १ ॥

तद्वो गाय (ग्रा. ३. १२. ११५. १) इत्याद्ये हीष्याः प्राप्त्यर्थम् ॥ १ ॥

इन्द्रा औऽहो२३४ । म्माइ ॥ २ ॥

5 य आनयत् (ग्रा. ३. २. १२७. २) इति द्वितीये अप्राप्तः ॥ २ ॥

येषामिन्द्रोयुवाइहा । ऊवाइ । ऊवो२३४ वा ॥ ३ ॥

आघागाद्ये (ग्रा. ४. २. १३३. १) ॥ ३ ॥

न्याय्यो वा षडक्षरः ॥ ४ ॥

न्याय्यो वा षडक्षरो भवति ॥ ४ ॥

10 इहान्तो वा ॥ ५ ॥

त्रयो विकल्पाः ॥ ५ ॥

नियामञ्चाइ । त्वमारञ्जा २३४ ताइ ॥ ६ ॥

इहेवशृण्वायाम् (ग्रा. ४. ३. १३५. १)। अप्राप्तसंधित्वात ॥ ६ ॥

नारमोइ । नृ । षाहमोऽइ ॥ ७ ॥

15 प्रसम्राज (ग्रा. ४. ३. १४४. २) द्वितीये ॥ ७ ॥

ओन्तस्त्र्यक्षरश्चतुरक्षरो वा ॥ ८ ॥

ओकारान्तस्त्र्यक्षरश्चतुरक्षरो वा तृतीयान्तः ॥ ८ ॥

नरनृषाहंमा ॥ ९ ॥

19 तृतीये हिशब्दस्य पूर्वः ॥ ९ ॥

---

8. D. न्यायः for न्याय्यः.
9. V[1]. वाय्यो, DB[1]. वा यो for वा.
16. S[2]. ओंत्र्यक्षरश्चतुरक्षरो वा तृतीयान्तः ।
19. D. after तृतीये adds:–साम्नि.

**नरंनृषाहम् । मा५ःहिष्ठाम् ॥ १० ॥**

अप्राप्तश्चतुर्थे ॥ १० ॥

**यवाशा२३ इराः ॥ ११ ॥**

**अपादुशि** - (४. ४. १४५. १) **प्रथमे** ॥ ११ ॥

**यवाशाइराः ॥ १२ ॥**  5

इति द्वितीये ॥ १२ ॥

**पूर्वं वैनयोः पर्व ॥ १३ ॥**

एनयोः पर्वणोः पूर्वं वा पर्व ॥ १३ ॥

**अत्राह पर्यापवस्वेति मध्यमः पादः ॥ १४ ॥**

प्रतिहारो भवति । अप्राप्तत्वात् ग्रहणम् । **अत्राहगो** - (ग्रा. ४. ४. १४७. २) द्वितीये । **परिस्वानासः** (ग्रा. १३. २. ४४५. १) इति । **आपवस्वसहस्रिणम** (ग्रा. १४. ४. ६०१. १) इति । इतराभ्यां लक्षणप्रसङ्गाच्चैतस्य ग्रहणम् ॥ १४ ॥  10

**शा३ ताक्रा३ तूम् इति वा ॥ १५ ॥**

**पान्तमा** (ग्रा. ४. ५. १५५. ३) तृतीये त्रयो विकल्पाः । विश्वासाहम् आद्यं वाक्यत इति वचनात् । अन्यथा नैवेदमवक्ष्यत् ॥ १५ ॥  15

**मंःह्विष्ठंचर्षणाये३ इति वा ॥ १६ ॥**

इति वा विकल्प्यते ॥ १६ ॥

**दा३ नाम् । या३ ता ॥ १७ ॥**

**प्रव इन्द्राय** (ग्रा. ४. ५. १५६. १) इति प्रथमे द्वितीये च। कुतः । परेषु चतुर्षु चतुरक्षरमिति वचनात् ॥ १७ ॥  20 21

---

10. AL. अग्रहणम् for ग्रहणम्.
18. S[1] S[2]. om. इति वा विकल्प्यते.

**परेषु चतुर्षु चतुरक्षरमुत्तमपादादौ सस्तोभम् ॥ १८ ॥**

**परेषु** सामसु चतुरक्षरः प्रतिहारो भवति । क । **उत्तमपादादौ** सह स्तोभेनेति । **चतुरक्षर**मित्युक्ते आर्चिकाक्षरे प्रसङ्गात् । अतः सहस्तोभेनेति ॥ १८ ॥

5 **सखाय आ । (ग्रा. ५. ५. १६३. ३) हयाइ । साखायः स्तोमवा औहो (ग्रा. ५. ५. १६४. १) । पिबा तुवस्या गवा हाइ । (ग्रा. ५. ६. १६५. २) जघान नवतीर्नव इया (ग्रा. ५. ७. १७९. १) । ओजस्तदस्य (ग्रा. ५. ७. १८२. १) हाशब्दः ॥ १९ ॥**

10 स्तोभप्रतिषेधार्थः । न तु हुम्मान्तत्वादेव स्तोभः प्रसिद्धः । आह तत्रातिक्रमात् प्रतिषेधानित्यत्वं व्याख्यातम् । प्रतिषेधः कथम ? अत्र ऊर्ध्वं स्यान्न । प्रागिन्द्रस्य त्विष इत्यत्र **हाशब्दः** तृतीयः प्रतिहारो भवति । प्रस्तावश्च हाशब्द एव । कुतः । समाधेः ॥ १९ ॥

**यत्सो (ग्रा. ५. ८. १८८. १) वाजी (ग्रा. ५. ९. ११९. १)**
15 **पूर्वोऽभ्यासः । परो वा ॥ २० ॥**

**अयाधिया च गव्यया** (ग्रा. ५. ८. १८८. १) इत्यत्र पूर्वो वा प्रतिहारो भवति । **यत्सोमे३ सोमआ** । अथवा परो भवति । किं सप्तित्वात् संघात इति । **मओ** इति ब्रूमः । अभ्यासः परो भवति । कृत्स्नाभिधानाच्च ॥ २० ॥

19 ॥ इति पञ्चविधसूत्रे सभाष्ये प्रथमे प्रपाठके षष्ठी खण्डिका ॥

---

1. S¹ S². after परेषु add: च.
2. DB¹ S¹. सस्तोभेन सहस्तोभेन.
3. AD. स्तोभेन, for सहस्तोभेन.
10. L A. आतत्रातीक्रमात्, V². आ । तत्रातिक्रमात् for आह तत्रातिक्रमात्.
13. L ADB¹ S¹ S². ऊत for कुतः.
17. AL DB¹. सप्ति for सप्तित्वात्.
18. V¹. म तुं इति । त्वा प्रब्रूमः, S². यओ इति ब्रूमः for मओ इति ब्रूमः ।

## सप्तमी खण्डिका

**अभि त्वाश्वां द्वितीये तृतीयः पादः ॥ १ ॥**

**अभित्वाशूर** (ग्रा. ६. १. २३३. २) इत्यस्यां द्वितीये साम्नि तृतीयः पादः प्रतिहारो भवति ।

**त्वां वृत्रेषु पत्यन्तः ॥ २ ॥** 5

**त्वां** वृत्रेष्विति त्वामिद्धि-(ग्रा. ६. १. २३४. १) प्रथमे । विभेदात् स्तोभनिवृत्त्यर्थं वा ॥ २ ॥

**पुरुहूतन्नमे गाइरा ॥ ३ ॥**

**तरणिरित्सि** - (ग्रा. ६. १. २३८. १) प्रथमे । उग्रँशर्म्मा-प्राप्त्यर्थम् ॥ ३ ॥ 10

**नेमिन्तष्टे वासा ॥ ४ ॥**

द्वितीये स्तोभप्रतिषेधार्थं विकल्पार्थं वा ॥ ४ ॥

**पूर्वा वा विधा ॥ ५ ॥**

अस्मादेव पर्वणः **पूर्वा** विधा ॥ ५ ॥

**नेमिं क्रीडन् कृष्टान्तः ॥ ६ ॥** 15

**नेमि**मित्येवमादिः **कृष्टान्तो** भवति । उच्यते । या **क्रीडन्**स्वरा नेमिः स्वप्रतिहारो भवति । क्रीडन् कृष्टान्तः । वाशब्दान्त इत्यर्थः ॥ ६ ॥

**ऐहोइगाऽ२विष्टयाइ ॥ ७ ॥**

**त्वंह्येहिचेरव** (ग्रा. ६. १. २४०. १) इत्याद्ये ॥ ७ ॥

**परो वा कृष्टान्तः ॥ ८ ॥** 20

वाशब्दान्तः ॥ ८ ॥ 21

---

6. V[1] LA. विभेदा for विभेदात्.

12. D. तृतीये साम्नि, S[1]. तृतीये for द्वितीये.

16. S[1]. स्वारा for स्वरा.

सर्वत्रैव नेम्याम् ॥ ९ ॥

उत्तमपादादौ सत्यां सर्वत्रैव एष न्यायो भवति । पूर्वं पर्व नेमिर्वेति । यथा हारायणे ॥ ९ ॥

आइहियाइ । गाविष्टयाऽ२इ ॥ १० ॥

5 त्वं ह्येहि - (ग्रा. ६. १. २४०. २) द्वितीये ॥ १० ॥

न्याय्यस्त्र्यक्षरः ॥ ११ ॥

उदिन्द्र (ग्रा. ६. १. २४०. २) इति ॥ ११ ॥

षडक्षरो वा ॥ १२ ॥

अत्रैव त्रयो विकल्पाः ॥ १२ ॥

10 सा चा उवा । सूताउवा । द्विप्रतिहारम् ॥ १३ ॥

माचिदन्यायां (ग्रा. ६. १. २४२. १) । द्विप्रतिहारमिति नैतावेव यावदुद्धारितौ । एक एवायम् । तेनैतत्सदृशोऽन्यो भवति । राइपा उवा । ण्याताउवा । अयं द्वितीयः ॥ १३ ॥

न्याय्यो वा ॥ १४ ॥

15 वहन्तुसोमपीहो२ । हुंमा२ ॥ १५ ॥

आत्वासहस्रम् (ग्रा. ६. २. २४५. ३) इति तृतीये ॥ १५ ॥

विपश्चितो अभिस्तोमैः इहाहाहोइ । इहोऽ२३४ वा ॥ १६ ॥

इमा उत्वा (ग्रा. ७. २. २५०. २) द्वितीये अप्राप्तः ॥ १६ ॥

20 वाजयन्तो रथाः । इवो२३४ हाइ ॥ १७ ॥

21 उदुत्ये (ग्रा. ७. २. २५१. ३) तृतीये । अप्राप्त एव ॥ १७ ॥

---

16. S². ofter तृतीये adds:– पश्चिमे and S¹. विपश्चि.
17. S¹S². om. विपश्चितो.

न हि त्वा यशा ऽ२ सांवसू । वी ऽ२३४दाम् ॥ १८ ॥

शग्ध्यूषु (ग्रा. ७. ३. २५३. १) आद्ये । वसोराधाप्राप्त्यर्थम् ॥ १८ ॥

स्तोत्रँ राजसु गायतस्तो ऽ२३ त्वाम् ॥ १९ ॥

प्रमित्रायान्त्ये (ग्रा. ७. ३. २५५. ३) । विकल्पार्थं ग्रहणम् ॥ १९ ॥

द्व्यक्षरो वाभ्यासादिः ॥ २० ॥ 5

स्तोत्रामित्यन्तम् । श्रायन्तीयस्यैवं द्रष्टव्यम् । कुतः ? संघातसामान्यात् ॥ २० ॥

द्युम्नमाभरा इति च स्तोभान्तः ॥ २१ ॥

यदिन्द्र नाहुषीष्वा (ग्रा. ७. ३. २६२. १) इत्यत्र अप्राप्तः ॥२१॥

त्वागीर्भिर्द्युगदिन्द्राके१शिभीर२ः (ग्रा.७.४.२६४.१)॥२२॥ 10

अप्राप्तः ॥ २२ ॥

पुरंदरा । प्रगायात्वा२ः (ग्रा. ७. ४. २७१. १) इति सस्तोभः ॥ २३ ॥

पादभेदात् ॥ २३ ॥

उत्तरे च ॥ २४ ॥ 15

एवमेव ॥ २४ ॥

द्वितीयपदनिधनेषु तृतीयः पादः ॥ २५ ॥

द्वितीयं पदं येषु निधनं भवति तेषु **तृतीयः पादः** प्रतिहारो भवति ॥ २५ ॥

वयमेन यदा कदा यत्सो ऽभीनो ॥ २६ ॥ 20

उदाहरणानि - वयमेनम् (ग्रा. ७. ४. २७२. १) इति प्रथमे । **यदा-कदाच** (ग्रा. ८. ६. २८८. १) इत्याद्ये । **यत्सोममिन्द्र** (ग्रा. १०. ४. ३८४. ३) इति तृतीये । **अभीनोवा** (ग्रा. १६. ८. ५४९. १) इत्याद्ये । 23

4. D. प्रमित्राय प्रार्यमण इत्यन्त्ये for प्रमित्रायान्त्ये.

5. D. om. वा.

केचिद्यत इति ग्रहणात् न सर्वत्र । यथा तरोभिः (ग्रा. ६. १. २३७. १) प्रथमे । न चोदाहरणग्रहणम् । प्राप्ते विनाम् । अन्ये तु सर्वत्रैव । अनुषङ्ग आम्नानात् । चतुष्पदावसरे ग्रहणात् त्रिपदासु च न भवति । भक्त्यसंभवाच्च । यथा कविमग्निमपघ्नन् वेति च । य [द्] इह पादग्रहणात् कृत्स्ने च त्रिपदे निधने कृत्स्ने च तृतीये पादे अनिधने सति । एवं चान्यत्रा-नेन तरोभिः - प्रथमे च न भवति ॥ २६ ॥

वयमेद्द्वितीये तृतीयः पादः ॥ २७ ॥

तस्मा उवा । द्यामवर्नाइ । सूतंभग (ग्रा. ७ ४. २७२. २) इति तृतीयः पादः ॥ २७ ॥

ज्या इष्ठं यो वा । त्राहागाऽ२३४र्णाइ ॥ २८ ॥

यो राजाचाद्ये (ग्रा. ७. ५. २७३. १) । इन्द्रयशाप्राप्त्यर्थम् ॥ २८ ॥

रथाइतम्रमतूर्त्ताऽ२३४ न्तू ॥ २९ ॥

इत ऊती - (ग्रा. ७. ६. २८३. १) प्रथमे । अप्राप्ते उत्तमपादादेः एकीकरणात् ॥ २९ ॥

राथा इति वा ॥ ३० ॥

विकल्पार्थम् ॥ ३० ॥

रथीतमा२मतूर्ताऽ२३४ न्तू ॥ ३१ ॥

रथाइ द्वितीये । अश्वसंघातप्राप्त्यर्थम् ॥ ३१ ॥

---

1. DV[2] B[1] LS[1]. इ ग्रहणम् । तेन, A इति ग्रहणम् । तेन for इति ग्रहणात् । न.

2. B[1] LA. प्राप्तो, V. प्राप्ता for प्राप्ते. the readings प्राप्ते विनाम् seems to be corrupt ;

3. AL. साम्नात् for आम्नानात्.

4. A. भक्तिसंभवात् for भक्त्यसंभवात्.

8. B[1] LAV[1] S[1]. om. तस्मा...पादः.

16. B[1] LAV[1]. om. विकल्पार्थम्.

18. ABLD S[1]. असंघात for अश्वसंघात.

विपागिरौ वा ओऽ२३४ वा । धर्तारंव्यौवाओ२३४ वा ॥ ३२ ॥

यदाकदायां (ग्रा. ८. ६. २८८. ३) प्राप्त्यर्थम् ॥ ३२ ॥

॥ इति पञ्चविधसूत्रे सभाष्ये प्रथमे प्रपाठके सप्तमी खण्डिका ॥

॥ प्रथमः प्रपाठकः समाप्तः ॥ 5

# द्वितीयः प्रपाठकः

## प्रथमा खण्डिका

वार्द्धा२ः श्राइद्ददोवसू होवा ॥ १ ॥

योनिष्ट-(ग्रा. ८. ९. ३१४. २) द्वितीये । भिन्नतरत्वाद्वचनम् ॥ १ ॥

5 वचांसिया । स्माऽ२ इस्थवि । रायतक्षुः ॥ २ ॥

अपूर्व्या पुरुत (ग्रा. ८. ९. ३२२. १) इति । अप्राप्तेः ॥ २ ॥

परो वा षडक्षरोऽवद्रप्सद्वितीयतृतीययोः सिद्धः ॥ ३ ॥

प्रतिहारः । कस्मादुच्यते ? अदर्शिनिवृत्त्यर्थम् । सिद्धमेक इति ॥ ३ ॥

सस्तोभतृतीये ॥ ४ ॥

10 विशेषः ॥ ४ ॥

कृणुध्वमिहाऽ२वाऽ२३४ इशाः ॥ ५ ॥

प्रवोमहे (ग्रा. ८. १०. ३२८. १) इति । नियमार्थं विकल्पार्थं वा ॥ ५ ॥

पूर्वीरिति वा ॥ ६ ॥

15 विकल्पः ॥ ६ ॥

ब्रह्माणस्त्वा शताऽ१क्राऽ२तो । ब्रह्माणस्त्वोऽ२३४ हाइ ॥ ७ ॥

गायन्ति - (ग्रा. ९. १२. ३४२. २) द्वितीये । महित्रीणि-निवृत्तिः ॥ ७ ॥

20 उतोहाइ ॥ ८ ॥

21 विश्वाः पृतनायाम् (ग्रा. १. ३. ३७०. १) ॥ ८ ॥

---

6. DL. अप्राप्तः for अप्राप्तेः.

8. V[1]. सदृशं for अदर्शि ; A. एकम् for एके.

सर्वं वा पदं परं वा पर्व ॥ ९ ॥

विकल्पः ॥ ९ ॥

एकाक्षर ओयेऽ२ ॥ १० ॥

**इन्द्राय साम** (ग्रा. १०. ४. ३८८. २) इति द्वितीये एकाक्षर आर्चिकमभिप्रेत्यैतदुक्तम् ॥ १० ॥ 5

पाऽ२ना इति चोपद्रवः ॥ ११ ॥

आर्चिकमेवाभिप्रेत्य [पा] **ना** इत्याह । उभयवचनं वैकृतत्वात् ॥ ११ ॥

आइशानो अप्रतिष्कुतः । आइशा। नो अप्रताइ । ष्कूऽ२३४ ताः इति वा ॥ १२ ॥

**य एक** (ग्रा. १०. ४. ३८९. ३) इत्यत्र त्रयो विकल्पाः ॥ १२ ॥ 10

नार्ताऽ२माऽ२ । होवा२हा२ । ॥ १३ ॥

**सखाय आशिषा** (ग्रा. १०. ४. ३९०. २) इति द्वितीये ॥ १३ ॥

ष्णवा संस्तोभः पूर्वा ॥ १४ ॥

तृतीये साम्नि ॥ १४ ॥

यद्धँसिवृ । त्रमोऽ२२ ॥ १५ ॥ 15

**गृणेतदिन्द्रान्त्ये** (ग्रा. १०. ५. ३९१. ३) ॥ १५ ॥

अयाꣳसाऽ२सो ॥ १६ ॥

**यस्य त्यदन्ते** (ग्रा. १०. ५. ३९२. ४)। पदभेदं कृत्वा ॥ १६ ॥

पीति वैकाक्षरः ॥ १७ ॥

विकल्पः ॥ १७ ॥ 20

---

1. S[1] S[2]. trans: पर्व before विकल्पः.

6. V[1] ALB[1]. पाइना for पाना.

सोतुर्बाहुभ्याम् । सुयताऽ३ः । सुयताऽ३ः ॥ १८ ॥

पिबासोम - (ग्रा. १०. ६. ३९८. २) द्वितीये ॥ १८ ॥

न्याय्यो वा पञ्चाक्षरः परो वाभ्यासिके त्रयो विकल्पाः ॥ १९ ॥

5　एत एवोक्ताः ॥ १९ ॥

स्तुषाइ । सखाय आऽ२३हाइ ॥ २० ॥

योन इदमिदाघे (ग्रा. १०. ६. ४००. १) । नन्दाप्राप्त्यर्थम् ॥ २० ॥

अभ्यासो निना । यताऽ३मूऽ३वस्तुषाइ ॥ २१ ॥

उत्तरेऽभ्यासो भवति ॥ २१ ॥

10　न्याय्यस्त्र्यक्षरश्चतुरक्षरो वा ॥ २२ ॥

विकल्पः ॥ २२ ॥

12　॥ इति पञ्चविधसूत्रे सभाष्ये द्वितीयप्रपाठकस्य प्रथमा खण्डिका ॥ ४ ॥

---

3, 10. DA न्यायः for न्याय्यः.

## द्वितीया खण्डिका

**पङ्क्तिषु वैधेषूत्तमपादादौ विप्रतिपत्त्यां चतुर्थी पदगीतिर्न्याय्यो वा स्वादोरिन्द्रोम प्रेहि ॥ १ ॥**

**पङ्क्तिषु** यानि वैधसामानि तेषु **चतुर्थी पदगीतिः** प्रतिहारः । **उत्तमपादादौ** च यदि विप्रतिपत्तिः विधान्यायस्य **न्याय्यो वा** । उदाहरणम्—**स्वादोः** (ग्रा. ११. ७. ४०९. १) **इन्द्रोम** (ग्रा. ११. ७. ४११) **प्रेह्यभि** (ग्रा. ११. ७. ४१३) इति च । तथाभूतोदाहरणादकृत्स्नवैधेष्वपि स्यात् ॥ १ ॥ 5

**पूष्णेऽ३ होइ । भगाऽ२३४ या ॥ २ ॥**

**परिप्रधन्व** - (ग्रा. ११. ९. ४२७. ३) तृतीये । **कृत्स्नेऽभ्यास उत्तरेऽन्त्यधर्म** (प. वि. सू. १. ४. १४) इति प्राप्ते विकल्पार्थं वा ॥ २ ॥ 10

**पूष्णे भगायेति वा । पूष्णे३४३ होऽ२३४ इति वा ॥ ३ ॥**

त्रयो विकल्पाः ॥ ३ ॥

**धर्मविधर्मणोर्द्विपदाकारम् ऋचः परं द्वौ स्तोभौ ॥ ४ ॥**

द्विपदाकारप्रयोगे **ऋचः परं** गानं प्रतिहारो भवति । किं तत्? 15 **द्वौ स्तोभौ** त्सिबावर्जितौ । द्वाविति वक्तव्ये स्तोभाविति द्विवचनं कस्मात्? [ ] ॥ ४ ॥

**अक्षरपङ्क्तिषु सिद्धस्तृतीयः पादो निधनपरे ॥ ५ ॥**

[अक्षर]- **पङ्क्तिषु सिद्धः तृतीयः पादः** प्रतिहारः । कथम्? असंभवात् । **निधनपर** इति अनुस्मरणार्थम् । अन्यथा पङ्क्तिष्वित्यधिकारात् 20 संदेहः स्यात् । अथवा स्तोभप्रतिषेधार्थम् । कथम्? **तृतीयः पाद** इति वचनात् ॥ ५ ॥ 22

---

1. L. पादादौ for उत्तमपादादौ.

21. B[1] DVALS[1] S[2]. after कथम् add पाद इति वचनात् ; see. CN ; D. om. पादः.

अनिधनपरेऽपि ॥ ६ ॥

अनिधनपरेऽपि तृतीय एव पादः। यथा **क्रतुन्नभा** (ग्रा. ११. ९. ४३४. १) इति। एके तु **हार्दिस्पृशाम्** (ग्रा. ११. ९. ४३४. १) इति। परे निधनपरे एव नान्ये। उदाहरणानि—**परिप्रवाद्ये** (ग्रा. ११. ९. ४२७. १) पर्वभेदं कृत्वा। **स्वादुर्मित्राय** (ग्रा. ११. ९. ४२७. १) इति। अन्ये **पूष्णेऽ३हो** (ग्रा. ११. ९. ४२७. २) इति द्वितीये च स्तोभवर्जितः। **पवस्वसोमहेदक्षाय** (ग्रा. ११. ९. ४३०. १) **इन्दुः पविष्टे** (ग्रा. ११. ९. ४३१. १) च। **कईं व्यक्ताद्ये** (ग्रा. ११. ९. ४३३. १) परे च। एवमादीनि ॥ ६ ॥

र्यराज्ये। वाजाःअभिपवमान। पवमाना ॥ ७ ॥

**अनु हित्वा** (ग्रा. ११. ९. ४३२. १) इत्यत्र ॥ ७ ॥

ऋचः परमोऽ२हाऽ२४२। ओऽ२४ हा। एषा ब्रह्मा ॥ ८ ॥

अत्र **ऋचः परं** प्रतिहारः। किं तत्? **ओहा ओहा**। (ग्रा. ११. १०. ४३८. ४)। ऋचः परमिति यदि न ब्रूयात् संशयः स्यात् ॥ ८ ॥

न स्पृशत् ॥ ९ ॥

**औहोइ। शंपदाम्** (ग्रा. ११. १२. ४४१. १) इत्यत्र **पर्वभेदं** कृत्वा ॥ ९ ॥

पुष्ये म चतुरक्षरमृचः परम् ॥ १० ॥

**ओवा। उपप्रक्षेमधुमतिक्षियन्तः। ओवा** (ग्रा. १२. ११. ४४४. १) इत्यत्र **चतुरक्षरम् ऋचः परः प्रतिहारः। ओ। वा ओवा** इत्येतत् ॥ १० ॥

---

2. S[2]. om. एव.

4. V[1]. न्मान्ये for नान्ये.

11. B[1]. om. अनु...अत्र ; V[1] ALS[1] S[2]. om. अत्र.

